# राम-कथा-मञ्जरी ।

# Rama-Katha-Manjari

With Notes

IN

## Sanskrit, Hindi and English

BY

**SANT GOKAL CHAND SHASTRI, B.A.,**

Head Sanskrit Teacher, D. A. V. High School,

*LAHORE.*

सन्त गोकुलचन्द्र शास्त्री, बी. ए.

मुख्य-संस्कृताध्यापक, डी. ए. वी. हाई स्कूल, लाहौर ।

---

*Published by*

**BHARAT HOUSE** (भारतहौस)

Publishers and Book-Sellers,

Anarkali, LAHORE.

---

बाम्बे मैशीन प्रेस लाहौर में मैनेजर शरत् चन्द्र लखनपाल के

प्रबन्ध से छपा ।

# विषयसूची ।

समस्त भूमण्डल पर नहीं तो भारतवर्ष में तो अवश्य, मर्यादा पुरुषोत्तम श्री रामचन्द्र के आदरणीय नाम ने प्रत्येक नर नारी के हृदय में थोड़ा बहुत स्थान प्राप्त कर रक्खा है। उनके सच्चरित्र को पढ़ने के लिये सभी का मन सदा उत्सुक रहता है।

यों तो अनेक कवियों ने अपने २ भावों द्वारा उनका यश गान किया है किन्तु जो रस आदि कवि श्री वाल्मीकि जी ने अपने रामायण में सरल तथा मधुर शब्दों में भर दिया है उसको कोई तुलना नहीं कर सका। यह हो भी क्यों न? इन्हों ही ने तो सब से पहले राम-कथा को काव्य में परिणत किया था। अतः वाल्मीकि जी के ही शब्दों में रामायण-कथा को पढ़ने में सभी का मन चाहता है। किन्तु साधारण लोग वाल्मीकि रामायण जैसे इतने बड़े काव्य को पढ़ने का उत्साह नहीं कर सकते, इस कारण इस क्षति को किसी अंश में पूर्ण करने के लिये मैं इस स्वल्प पुस्तक को जनता के सम्मुख उपस्थित करने का साहस करता हूं।

इस में रामचन्द्र की उत्पत्ति से लेकर उन के राज्याभिषेक तक पूरी मूल कथा वाल्मीकि जी के ही शब्दों में रक्खी हुई है। कहीं २ पर रामायण में जो बड़े २ उत्तम उपदेश भरे हैं उन में से भी कुछ उचित स्थानों में दिये हैं। मेरी यह प्रबल इच्छा थी कि मैं उस महाकवि के कुछ और भी उपदेश-रत्नों का इस में समावेश करता किन्तु मुझे भय था कि इस से पुस्तक का विस्तार बहुत बढ़ जाता और इस पुस्तक के लिखने में जो उद्देश्य था वही चूक जाता।

जितनी सरलता और सरसता वाल्मीकि के रामायण में है वह और कहीं नहीं पायी जाती । थोड़ी बहुत संस्कृत भाषा जानने वाला भी उसके श्लोकों का अर्थ शीघ्र समझ लेता है । इस लिए यह पुस्तक मैट्रिकुलेशन आदि परीक्षाओं के लिए अत्युपयोगी है ।

पच्चीस हजार श्लोकों में से पाञ्च सौ श्लोकों को निकाल कर पूरी कथा वर्णन करना कुछ सहज नहीं, इस लिए बहुत स्थानों पर एक श्लोक के पूर्वार्ध तथा उत्तरार्ध में सैकड़े श्लोकों का अन्तर हो जाता है । एक दो स्थानों में कथा का सम्बन्ध दिखाने के लिए श्लोकों को आगे पीछे भी करना पड़ा है ।

इस पुस्तक की उपयोगिता को और बढ़ाने के लिए—

(क) प्रत्येक पृष्ठ पर संस्कृत टीका ऐसे सरल रूप में दी गई है कि संस्कृत में साधारण योग्यता रखते हुए भी पुरुष उस से लाभ उठा सकें ।

(ख) जो लोग संस्कृत नहीं जानते उन के लिए पुस्तक के अन्त में कठिन शब्दों के हिन्दी में अर्थ दिये हुए हैं ।

(ग) जिन प्रान्तों में हिन्दी भाषा प्रचलित नहीं उनके लिए कठिन शब्दों की इंग्लिश भाषा में व्याख्या की हुई है ।

मुझे आशा है कि सहृदयगण इसे अपनाकर मेरे उत्साह को बढ़ायेंगे—

सन्त गोकुलचन्द्रः

——:o:——

## बालकाण्डम् ।

अयोध्या वर्णनम्–दशरथस्य पुत्रेच्छा–तदर्थं पुत्रेष्टिप्रारम्भः–समाप्ते समये दशरथ पुत्रोत्पत्तिः–तेषान्नाम करणम्–दशरथ समीपे विश्वामित्रागमनम्––मारीचादि राक्षसकृत विघ्नविनाशाय राम लक्ष्मणयोरात्मना सह नयनम्–रामेण विश्वामित्रात् बलातिबल विद्या प्राप्तिः––रामेण ताड़का वधः–विश्वामित्रस्य दीक्षा प्रवेशः–रामेण यज्ञविध्वसायागतानां राक्षसाणां वधः–सरामलक्ष्मणस्य विश्वामित्रस्य मिथिला प्रस्थानम्–विश्वामित्रेण जनकाय रामागमन कारण वर्णनम्–जनकेन धनुःप्रशंसा–रामानुरोधेन धनुष आननयम्–रामस्य धनुर्भङ्गः-दूत मुखेन दशरथस्यायोध्यायाः आह्वयनम्–रामा दीनां परिणयः–निवर्तन काले मार्गे रामेण परशुरामाभिमुख्यम्–तद्गर्वभङ्गः–पराजितस्य परशुरामस्य निर्गमनम्–सपुत्रस्य दशरथस्यायोध्या प्राप्तिः–रामा दीनां पितृ शुश्रूषणम् । १–१४

## अयोध्या काण्डम् ।

भरतस्य मातुल गृह गमनम्–शत्रुघ्नस्य तत्सहयानम्–दशरथस्य रामयौवराज्य विचारः–सभासदां हर्षणम्–रामाय स्वाभिप्राय प्रकाशनम्–मन्थराया स्तद्वृत्त श्रवणम्–श्रुत्वा च कैकेय्युत्तेजनम्–कैकेय्या अशोक-भवेन प्रविश्य शोक प्रकाशनम्–दशरथागमने पुरा तद्दत्तवरयोरेकेन रामस्य चतुर्दशवर्षाणां वनवासस्य द्वितीयेन च भरताभिषेचनस्य प्रार्थनम्–दशरथस्य मूर्छा–रामेण कैकयी मुखात् तच्छ्रवणम्–रामस्य पितृ निदेशानुष्ठानस्य निश्चयः–रामस्य मातृ गृहं गत्वा तदाज्ञा प्राप्तिः-कौशल्यायाः

विलापः रामस्य च वनवासान्निवारणम्-रामस्य तदाश्वासनम्-तत्ताज्ञा प्राप्तिः—रामस्य सीता समागमः—तद्वनगमन निश्चयं श्रुत्वा सीतायाः सहगमनायाग्रह.—रामेण तस्यै सहगमनायानुज्ञापनम्—लक्ष्मणस्य रामानुगमनाय प्रार्थनम्—रामेण तत्सम्बोधनम्—अन्ते रामेण तत्प्रार्थन स्वीकरणम्—रामस्य गुह विषय प्रापणम्—रामानुगतस्य सुमन्त्रस्य निवर्तनम्—रामस्य भरद्वाजा श्रमात् चित्रकूट प्रापणम्—दशरथस्य मरणम्—दूतैः भरतस्य मातृ कुलादानयनम्—भरतस्य विलापः—कैकेय्या धिक्करणम्—कौशल्या भरतयो राम विवासन विषये सम्वादः—भरतेन प्रजा समर्पितस्य राज्यस्यास्वीकरणम्—पित्रौर्ध्वदेहिकादनन्तरं ससैन्यस्य भरतस्य राम प्रतिनिवर्तनाय वनगमम्—राम भरत सङ्गमनम्—पितृ मरण वृत्तं श्रुत्वा रामस्य शोकः-भरतेनातिप्रार्थितस्यापि रामस्य वनवासावधिमसमाप्या योध्यां प्रति निवर्तनास्वीकरणम्—राम पादुके आदाय भरतस्य तयोरेव राज्य पदारोपणम्—रामस्य चित्रकूट-त्यागः। १५—४४

## आरण्यकाण्डम्।

रामस्य दण्डकारण्यं प्रविश्या गस्त्येन समागमः—तस्माद्रामस्यास्त्र प्राप्तिः—ततः प्रस्थाय पञ्चवटी प्रापणम्—राम रूप मुग्धायाः शूर्पणखायाः तत्समीपमागत्य परिणयाय कथनम्—क्रुद्धेन लक्ष्मणेन तन्नासिका कर्ण छेदः—विलपन्त्यास्तस्याः खर दूषण समीपे गत्वा तयोरुत्तेजनम्—रामेण युद्धे तयोर्वधः—रावणस्य मारीचाय मृगरूप मास्थाय सीता हरणाया देशः—सीता प्रलोभनाया गतस्य मारीचस्य रामेण वधः—मृगस्य चीत्कारेण राम मृत्यु शङ्किते लक्ष्मणे सीतां विहाय गते पश्चात्

## किष्किन्धाकाण्डम् ।



## सुन्दरकाण्डम् ।



## युद्धकाण्डम् ।

समुद्रसेतु बन्धनम्—राम सैन्यस्य तद्द्वारा लङ्का प्रापणम्—राम रावणयोर्युद्धम्-कुम्भकर्ण वधः—मेघनादस्य युद्धक्षेत्रा गमनम्—तत्र च तस्य लक्ष्मणेन वधः—रावण क्षिप्तया शक्त्याऽभिहतस्य लक्ष्मणस्य मूर्छा—हनूमतः सञ्जीवन्यानयनम्-तत्प्रयोगेण लक्ष्मण मूर्छापगमः—रामस्य रावण वधः-लङ्का राज्ये विभीषणाभिषेचनम्-सीतां गृहीत्वा रामस्य प्रतिनिवर्तनम्-चतुर्दशवर्ष समाप्तिः—सुग्रीवादि सहितस्य रामस्यायोध्यागमनम्-तच्छ्रुत्वा भरतस्य स्वागत करणम्-रामाभिषेकः-किञ्चित्कालमयोध्याया मुषित्वा सुग्रीवादीनां प्रतिनिवर्तनम्-७१-८४

———

# राम-कथा-मञ्जरी

## ( बालकाण्डम् )

अयोध्या-वर्णनम्

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूत-धन-धान्य-वान् ॥१॥
अयोध्या नाम नगरी तत्रासील्लोक-विश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥२॥
तस्यां पुर्यामयोध्यायां वेदवित्सर्वसङ्ग्रहः ।
राजा दशरथो नाम लोकस्य परिरक्षिता ॥३॥
नानाहिताग्नि र्नायज्वा न क्षुद्रो न च तस्करः ।
कश्चिदासीदयोध्यायां न चावृत्तो न संकरः ॥४॥
तस्य चैवं प्रभावस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥५॥

---

( मुदितः ) सन्तुष्टजनः । ( स्फीतः) उत्तरोत्तरं वृद्धिंगतः । (मानवेन्द्रेण) मनुष्य-स्वामिना । (सर्वसंग्रहः) सर्वेषामपरिमित-बल-राष्ट्र-दुर्गादीनां संग्राहकः । ( अनाहिताग्निः ) अजस्राग्नि-होत्ररतः । ( अयज्वा ) यागरहितः । ( अवृत्तः ) सदाचाररहितः । ( एवं-प्रभावस्य ) एवं वर्णितः प्रभावोयस्य । (तप्यमानस्य) एवं-विधैश्वर्यवत्त्वेऽपि परितप्यमानस्य ।

दशरथस्य यज्ञ-प्रारम्भः

ततो वशिष्ठ-प्रमुखाः सर्व एव द्विजोत्तमाः ।
ऋष्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥६॥

ततः प्राक्रमदिष्टिं तां पुत्रीयां पुत्रकारणात् ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥७॥

समाप्त-दीक्षा-नियमः पत्नी-गण-समन्वितः ।
प्रविवेश पुरीं राजा सभृत्य-बल-वाहनः ॥९॥

दशरथ पुत्रोत्पत्तिः

ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
कौशल्याजनयद्रामं सर्व-लक्षण-संयुतम् ।
भरतोनाम कैकेय्यां जज्ञे सत्य-पराक्रमः ॥१०॥

अथ लक्ष्मण-शत्रुघ्नौ सुमित्राऽजनयत्सुतौ ।
उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥१०॥

[ युग्मकम् ]

अतीत्यैकादशाहं तु नाम-कर्म तथाकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयी-सुतम् ॥११॥

सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरन्तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥१२॥

---

(आरभन्) छान्दसम् । (पुत्रीयां) पुत्र-प्राप्ति-हेतुभूताम् । (समाप्तदीक्षानियमः) समाप्तो दीक्षार्थो नियमो यस्य । (नावमिके तिथौ) नवम्यां तिथौ । (सत्यपराक्रमः) सत्यः कापट्यरहितः पराक्रमो यस्य । (जनाकुलः) जनैः आकुलः व्याप्तः ।

KM

ते चापि मनुज-व्याघ्राः वैदिकाध्ययने रताः ।
पितृ-शुश्रूषणरता धनुर्वेदे च निष्ठिताः ।
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥१३॥
तेषामपि महातेजा रामः सत्य-पराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥१४॥
राम--याच- अथ राजा दशरथस्तेषां दार-क्रियां प्रति ।
नाय विश्वा- चिन्तयामास धर्मात्मा सोपाध्यायः स बान्धवः॥१५॥
मित्रागमनम् तस्य चिन्तयमानस्य मन्त्रि-मध्ये महात्मनः ।
अभ्यागच्छन् महातेजा विश्वामित्रो महामुनिः ॥१६॥
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ।
उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥१७॥✓
"अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
ब्रूहि यत्प्रार्थितं तुभ्यं कार्य्यमागमनम्प्रति ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम" ॥१८॥

---

( मनुजव्याघ्राः ) पुरुषसिंहाः । ( वैदिकाध्ययने ) वेद-सम्बन्ध्यध्ययने । (तेषा) मिति निर्धारणे षष्ठी । (इष्टः) प्रियः । ( शशाङ्कः ) चन्द्रः । ( दारक्रियाम ) विवाहम् । ( सोपाध्यायः ) सपुरोहितः । ( ब्रूहीत्यादि ) (तुभ्यं) ते (षष्ठ्यर्थे चतुर्थी) ( यत्कार्य्यं प्रति ) यत्कार्य्यार्थम् आगमनं तन्मया प्रार्थितः सन् ब्रूहि (दैवतम्) इष्टदेवोऽतः पूज्यः ।

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुत-विस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥१९॥
"यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल भव सत्य-प्रतिश्रवः ॥२०॥
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥२१॥
स्वपुत्रं राज-शार्दूल, रामं सत्य-पराक्रमम् ।
काकपक्ष-धरं शूरं ज्येष्ठं मे दातुमर्हसि ॥२२॥
शक्तोह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विकर्माण स्तेषामपि विनाशने" ॥२३॥
रामस्य प्रस्थानम् तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
प्रहृष्ट-वदनो राम माजुहाव सलक्ष्मणम् ॥२४॥

---

(अद्भुतविस्तरम्) दैवतं हि भवान्ममेत्याद्युक्ति-रूपमाश्चर्य प्रपञ्चम् । (तस्य) तद्वाक्य--प्रतिपाद्यस्य । (निश्चयम्) करिष्यामीति अङ्गीकारम् । (सत्यपरिश्रवः) सत्यप्रतिज्ञः (आतिष्ठे) आस्थितोऽस्मि । (कामरूपिणौ) यथेच्छारूपधारिणौ । (काकपक्षधरम्) बालानां कपोलसमीपे शिखा काकपक्षः । (विकर्माणः) विघ्नकर्तारः । (आजुहाव) आहूतवान् ।

( युग्मकम् )

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिपूजितम् ॥२५॥
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिक-पुत्राय सुप्रीतेनान्तरात्मना ॥२६॥

विश्वामित्रो ययावग्रे ततोरामो धनुर्धरः ।
काक-पक्ष-धरो धन्वी तं च सौमित्रिरन्वगात् ॥२७॥

अध्यर्ध-योजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥२८॥

राममन्त्र-शिक्षणम् । "मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।
एताद्विद्या-द्वये लब्धे नभवेत्सदृशस्तव" ॥२९॥

रामेण ताडका वधः । ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥३०॥

स वनं घोर-संकाशं दृष्ट्वा नृप-वरात्मजः ।

---

(कृतस्वस्त्ययनम्) कृतमङ्गलम् । (पुरोधसा) पुरोहितेन । (धन्वी) धनुर्विद्याकृतश्रमः (अन्वगात्) अनुजगाम । (अध्यर्ध-योजनम्) अर्धाधिकयोजनम् । (मन्त्रग्रामम्) बलाऽबलाविद्या संज्ञकं मन्त्रसमूहम् । (भावितात्मनः) ध्यातात्मस्वरूपात् । (घोरसङ्काशम्) भयानक-दर्शनम् ।

अविग्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥२१॥
"अहो वन मिदं दुर्गं झिल्लिका-गण-नादितम् ।
संकीर्णं वदरीभिश्च किन्वेतद्दारुणं वनम्" ॥२२॥
तमुवाच महातेजा विश्वामित्रो महामुनिः ।
"ताटका नाम भद्रन्ते भार्य्या सुन्दस्य धीमतः ।
इमौ जनपदौ नित्यं विनाशयति राघव ॥२३॥
सेयं पन्थानमावार्य्य वसत्यध्यर्ध-योजने ।
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ॥२४॥
नहि ते स्त्री-वध-कृते घृणा कार्य्या नरोत्तम ।
चातुर्वर्ण्य-हितार्थञ्च कर्त्तव्यं राजसूनुना" ॥२५॥
मुनेर्वचनमक्लीवं श्रुत्वा नृपवरात्मजः ।
ज्याघोष मकरोत्तीव्रं दिशः शब्देन नादयन् ॥२६॥
तं शब्द माभिनिध्याय राक्षसी क्रोध मूर्छिता ।
श्रुत्वाचाभ्य द्रवद्वेगाद् यतः शब्दो विनिःसृतः ॥२७॥

---

(अविग्रहतम्) जनसञ्चाररहितमतोऽक्षुण्णम् । (झिल्लिका) कीट विशेषः । (दुष्टचारिणीम्) दुराचारिणीम् । (अक्लीवम्) धृष्टम् । (तं शब्दं श्रुत्वा अभिनिध्याय) इत्यन्वयः । (अभिनिध्याय) शब्द-देशं निश्चित्य ।

तामापतन्तीं वेगेन विक्रान्ता मशनिमिव ।
शरेणोरसि विव्याध सा पपात ममार च ॥३८॥
अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
ददौ रामाय सुप्रीतो मन्त्र-ग्राम मनुत्तमम् ।
प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ॥३९॥

रामेण विश्वा-मित्र-यज्ञ-रक्षणम्

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
अनिद्रं षडहोरात्रं तपोवन मरक्षताम् ॥४०॥
अथ काले गते तस्मिन् षष्ठेऽहनि समागते ।
मारीचश्च सुबाहुश्च तयोरनुचराश्च ये ।
आगम्य भीमसंकाशा रुधिरौघमवासृजन् ॥४१॥
तावापतन्तौ सहसा दृष्ट्वा राजीव-लोचनः ।
मानवं परमोदारमस्त्रं परमभास्वरम् ।
चिक्षेप परमक्रुद्धो मरीचोरसि राघवः ॥४२॥
स तेन परमास्त्रेण मानवेन समाहतः ।

---

( विक्रान्ताम् ) प्रतिक्षिप्ताम् । ( उष्य , उषित्वा ) आर्षमिदम् । ( नियतेन्द्रियः ) निगृहीतेन्द्रियः । ( षडहोरात्रम् ) षड्-दिवसपर्य्यन्तम् । ( भीम सङ्काशाः ) भयङ्कराः । ( रुधिरौघम् ) रक्तस्रवम् । ( अवासृजन् ) ववृषुः । ( परमोदारम् ) परमश्रेष्ठम् ।

सम्पूर्णं योजनशतं क्षिप्तः सागर संप्लवे ॥४३॥

सुबाहु-मरणम् विगृह्य सुमहच्चास्त्र माग्नेयं रघुनन्दनः ।

सुबाहूरसि चिक्षेप स विद्धः प्रापतद् भुवि ॥४४॥

विश्वामित्रस्य अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।

मिथिला- निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥४५॥

प्रस्थानम् "मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ।

यज्ञः परम-धार्मिष्ठस्तत्र यास्यामहे वयम् ॥४६॥

त्वं चैव नर शार्दूल सहास्माभिर्गमिष्यसि ।

अद्भुतं धनुरत्नं च तत्र तद् द्रष्टुमर्हसि" ।

एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ॥४७॥

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।

विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥४८॥

विश्वामित्र मनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।

प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥४९॥

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।

"धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनि-पुङ्गव ।

---

( सागर-संप्लवे ) समुद्रमध्ये । ( निरीतिका ) बाधारहिताः । ( मैथिलस्य ) मिथिलाधिपतेः । ( परमधार्मिष्ठः ) अतिशय धर्मोत्पादकः । ( यज्ञवाटम् ) यज्ञ शालाम्

यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभि स्सह" ॥५०॥
इत्युक्त्वा मुनि-शार्दूलं प्रहृष्टवदनस्तदा ।
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः ॥५१॥

जनकाय रामा- गमन-कारण वर्णनम्

"इमौ कुमारौ भद्रं ते देव-तुल्य-पराक्रमौ ।
काकपक्ष-धरौ वीरौ श्रोतुमिच्छामि तत्त्वतः" ॥५२॥
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ।
महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥५३॥
एव मुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
"इदं धनुर्वरं ब्रह्मन् जनकैरभिपूजितम् ॥५४॥
राजभिश्च महावीर्य्यैरशक्तैः पूरितुं पुरा ।
दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥५५॥
विश्वामित्रः सरामस्तु श्रुत्वा जनक-भाषितम् ।
'वत्स राम धनुः पश्य' इति राघवमब्रवीत् ॥५६॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ।

---

( यज्ञोपसदनम् ) यज्ञस्थानम् ( महाधनुषि जिज्ञासाम् ) रामस्य धनुर्विषयां दिद्रक्षाम् । पुरापूरितुमशक्तैराजभिश्चाभिपूजितम् ( इत्यन्वयः ) ।

मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ।
रामस्य "इदं धनुर्वरं ब्रह्मन् संस्पृशामीह पाणिना" ॥५७॥
धनुर्भङ्गः लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ।
आरोपयित्वा मौर्वीञ्च पूरयामास तद्धनुः ॥५८॥
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ।
तस्य शब्दो महानासीन्निर्घात-सम-निःस्वनः ॥५९॥
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥६०॥
प्रत्याश्वस्ते जने तस्मिन् राजा विगत-साध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनि-पुङ्गवम् ॥६१॥
"भगवन् दृष्टवीर्य्यो मे रामो दशरथात्मजः ।
अत्यद्भुतमचिन्त्यञ्च न तर्कित मिदं मया ॥६२॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्त्तारमासाद्य रामं दशरथात्मजम् ॥६३॥
भवतोऽनुमते ब्रह्मन् शीघ्रं गच्छन्तु मन्त्रिणः ।

---

अपावृत्य गतापवरणीकृत्य । ( लीलया ) अनायासेन । ( निर्घात-सम-निःस्वनः ) अशनि-ध्वनि-समः शब्दः ( विगतसाध्वसः ) रामेण धनुष्यनारोपिते कन्याऽविवाहिताऽवस्थास्यतीति या भीः सा गता । ( आहरिष्यति ) सम्पादयिष्यति । ( भवतोऽनुमते ) भवदनुमत्या ।

मम कौशिक भद्रन्ते अयोध्यां त्वरिता रथैः ।
राजानं प्रश्रितैर्वाक्यै रानयन्तु पुरं मम" ॥ ६४ ॥

जनकस्यायोध्यां प्रति दूतप्रस्थापनम्

जनकेन समादिष्टा दूतास्ते क्लान्त-वाहनाः ।
ददृशुर्देव-संकाशं वृद्धं दशरथं नृपम् ।
तत्रैव प्रश्रितं वाक्य मब्रुवन्मधुराक्षरम् ॥६५॥

"पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानुमते वाक्यं भवन्त मिदमब्रवीत् ॥६६॥
तच्च रत्नं धनुर्दिव्यं मध्ये भग्नं महात्मना ।
रामेण हि महाराज महत्यां जन-संसदि ॥६७॥
अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातु मर्हसि" ॥६८॥

दूत-वाक्यं तु तच्छ्रुत्वा राजा परम हर्षितः ।
गत्वा चतुरहं मार्गं विदेहा नभ्युपेयिवान् ॥६९॥
ततो राजान मासाद्य वृद्धं दशरथं नृपम् ।

दशरथप्राप्तिः

मुदितो जनको राजा हर्षं च परमं ययौ ।

---

( प्रश्रितैः ) विनययुक्तैः । ( अव्यग्रं ) व्यग्रतां विहाय । ( कौशिकानुमते ) विश्वामित्रानुमत्या । ( जनसंसदि ) जनानां सभायाम् । ( चतुरहम ) चतुर्दिनपर्यन्तम् । ( अभ्युपेयिवान् ) प्राप्तः ।

उवाच वचनं श्रेष्ठो नरश्रेष्ठं मुदान्वितम् ॥७०॥

'स्वागतन्ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ।
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्य-निर्जिताम् ॥७१॥

ददामि परमप्रीतो वध्वौ ते मुनि-पुङ्गव ।
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च ॥७२॥

एवं भवतु भद्रं वः कुशध्वज-सुते इमे ।
दशरथस्य पत्न्यौ भजेतां सहितौ शत्रुघ्न-भरतावुभौ' ॥७३॥
पुत्राणां ततः सीतां समानीय सर्वाभरण भूषिताम् ।
परिणयः समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौशल्यानन्द-वर्धनम् ॥७४॥

'इयं सीता मम सुता सह-धर्म-चरी तव ।
प्रतीच्छ चैनां भद्रन्ते पाणिं गृह्णीष्व पाणिना ॥७५॥

पतिव्रता महाभागा छायेवानुगता सदा ।'
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलन्तदा ॥७६॥
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।

---

( दिष्ट्या ) अस्मद्भाग्यवशेन । (वीर्यनिर्जिताम्) शौर्यप्राप्ताम् । ( अग्नेः समक्षं ) राघवाभिमुखे संस्थाप्य । ( सहधर्मचरी ) धर्मकार्येष्वभिन्नरूपा, स्त्रियाः पुरुषार्धाङ्गीत्वात् । ( प्रतीच्छ ) प्रतिगृहाण । ( मंत्रपूतम् ) कन्यादानमन्त्रेण पूतम् ।

चत्वारस्ते चतसृणां वसिष्टस्य मते स्थिताः ।
यथोक्तेन पथा चक्रुर्विवाहं विधि-पूर्वकम् ॥७७॥

विश्वामित्र- अथ रात्र्यां व्यतीतायां विश्वामित्रोमहामुनिः ।
गमनम् आपृच्छ्य तौ च राजानौ जगामोत्तरपर्वतम् ॥७८॥

रामस्य पर- राजाप्ययोध्याधिपतिः सह पुत्रै र्महात्माभिः ।
शुरामाभि- ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुगः ॥७९॥
मुख्यं तस्य ददर्श भीमसंकाशं जटामण्डलधारिणम् ।
च पराजयः भार्गवं जामदग्न्येयं राजा राज-विमर्दिनम् ॥८०॥

रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ।
"राम दाशरथे राम वीर्य्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनश्चैव निखिलेन मया श्रुतम् ॥८१॥

तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्य परं शुभम् ।
तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।

---

(यथोक्तेन पथा) शास्त्रोक्त विधिना । (आपृच्छ्य) अनुमतिं गृहीत्वा । (सबलानुगः) बलैः अनुगैरनुचरैश्च सहितः । (राज-विमर्दनम्) क्षत्रिय-ध्वंसकम् । (निखिलेन) निश्शेषतः । (गृह्य) गृहीत्वा आर्षमिदम् ।

पूरयस्व शरेणैव स्वबलं दर्शयस्व च" ॥८२॥
श्रुत्वा तु जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
आरोप्य स धनूरामः शरं सज्यं चकार ह ।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥८३॥
परशुराम-गमनम् ततोऽभिहतवीर्यत्वात्सहसैव जडीकृतः ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोपमम् ॥८४॥
गतोराम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
चोदयामास तां सेनां जगामाशु ततः पुरीम् ।
दशरथस्यायोध्याप्राप्तिः ननन्द सजनो राजा गृहे कामैः सुपूजितः ॥८५॥
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ।
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥८६॥
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ।
भरतं कैकेयी-पुत्रमब्रवीत् रघुनन्दनः ।
त्वां नेतु मागतो वीरो युधाजिन्मातुलस्तव ॥८७॥
गते च भरते रामो लक्ष्मणश्च महाबलः ।
पितरं देवसंकाशौ पूजयामासतु स्तदा ॥८८॥

---

(पूरयस्व) शरयुक्तं कृत्वा आकर्षस्व । (सज्यं) ज्या-युक्तम् । (अभिहत-वीर्यत्वात्) निर्जित-पराक्रमत्वात् । (वर्तयंति) पित्रुक्तं कुर्वन्ति ।

# * अयोध्या-काण्डः *

भरतशत्रुघ्नयोः भरत-मातुल-गृह-गमनम् गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीति-पुरस्कृतः ॥१॥
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥२॥
राम-यौवराज्य विचारः वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥३॥
तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः ।
तदा परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैव मुवाच प्रथितं वचः ॥४॥
"इदं शरीरं कृत्स्नं लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितम्मया ॥५॥

---

(अनघः) पापरहितः। (नित्यशत्रुघ्नः) नित्यशात्रवः कामाद्यस्तद्धन्ता । (प्रीति-पुरस्कृतः) भरत-विषयक-स्नेह युक्तः। (प्रीतिः) चिन्ता। (पर्जन्यः) मेघः। (समुदितैः) स्वाभाविकैः। (उद्धर्षणम्) हर्ष-जनकम्। (चरता) कुर्वता। (पाण्डुरस्य) श्वेतस्य। (आतपत्रस्य) छत्रस्य।

सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
सन्निकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान्" ॥६॥
इदं ब्रुवन्तं मुदिताः प्रत्यानन्दन्नृपा नृपम् ।
वृष्टिमन्तं महामेघं नदन्तइव वर्हिणः ॥७॥
"इच्छामोहि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥८॥

[ युग्मकम् ]

राम: सत्पुरुषो लोके सत्य-धर्म-परायणः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्य्ये साक्षाच्छचीपतेः॥९॥
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।
शक्तस्त्रैलोक्य मप्येको भोक्तुं किं नु महीमिमाम् ॥१०

तमेवं-गुण-सम्पन्नं रामं सत्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी" ॥११॥
तेषामञ्जलि-पद्मानि प्रगृहीतानि सर्वशः ।

---

(प्रत्यानन्दन्) प्राशंसन् । (वृष्टिमन्तम्) वर्षन्तम् । (वर्हिणः) मयूराः । (छत्रावृताननम्) छत्रेण आवृतमाननं यस्य तम् । (बृहस्पतेः) देवगुरोः । (शचीपतेः) इन्द्रस्य । (मेदिनी) तत्स्थोजन इत्यर्थः । (अञ्जलिपद्मानि) पद्माकारा नञ्जलीन् ।

प्रतिगृह्याब्रवद्राजा तेभ्यः प्रिय-हितं वचः ॥१२॥
"अहोऽस्मि परम-प्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ" ॥१३॥
ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ।
"रामः कृतात्मा भवता शीघ्रमानीयतामिति" ॥१४॥
स तथेति प्रतिज्ञाय सुमन्त्रो राज-शासनात् ।
रामं तत्रानयाञ्चक्रे रथेन रथिनां वरम् ॥१५॥
आसादस्थो रथ-गतं ददर्शायान्तमात्मजम् ।
गन्धर्व-राज-प्रतिमं लोके विख्यात-पौरुषम् ॥१६॥
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलि-पुटं नृपः ।
दिदेश श्रीमान् रुचिरं रामाय परमासनम् ।
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः ॥१७॥
'त्वया यतः प्रजाश्चेमाः स्वगुणै रनुरञ्जिताः ।
तस्मात्त्वं पुष्य-योगेन यौवराज्य मवाप्नुहि ।

---

( प्रगृहीतानि ) प्रकर्षेण शिरसि बद्धानि । ( कृतात्मा ) धर्मे कृतबुद्धिः ( गन्धर्व-राज-प्रतिमम् ) सौन्दर्ये गन्धर्व-राजसमम् ( विख्यातम् ) प्रसिद्धम् ( पौरुषं ) यस्य तम् । ( कृताञ्जलि-पुटम् ) बद्ध हस्त-द्वयम् । ( पुष्य-योगेन ) चन्द्रस्य पुष्ययोगोपलक्षितकाले ।

कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति" ॥१८॥

अथाभिवाद्य राजानं रथ मारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥१९॥

ज्ञाति-दासी यतो नित्यं कैकेय्या स्तु सहोषिता ।
प्रासादं चन्द्र-सङ्काश मारुरोह यदृच्छया ॥२०॥

मन्थरायाः प्रहृष्ट-मुदितैः पौरै रुच्छ्रित-ध्वज-मालिनीम् ।
कैकेय्युक्ते- अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥२१॥

जनम् प्रहर्षोत्फुल्ल नयनां पाण्डुर-क्षौम-वासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥२२॥

"अतिमात्रं प्रहर्षः किं जनस्यास्य च शंस मे" ।
विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवश्रियम् ॥२३॥

---

( कामतः ) प्रकामम् । ( ज्ञातिदासी ) मातृकुलस्य दासी । ( चन्द्र-सङ्काशम् ) सुधा-धवलितत्वात् । ( यदृच्छया ) न केनापि प्रेषिता । पौरैरुपलक्षिताम् । ( उच्छ्रिताः ) प्रासादशिखरारोपिताः ( ध्वजानां मालाः ) श्रेणयः यस्याम् । ( प्रहर्षेण उत्फुल्ले ) विकसिते ( नयने ) यस्यास्ताम् । ( पाण्डुर-क्षौम-वासिनीम् ) श्वेत-वस्त्र-धराम् । धात्रीम् रामस्येतिशेषः । ( राघव-श्रियम् ) राघवे राज्ञा न्यास्यमानां ( श्रियं ) राज्यलक्ष्मीम् ।

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयानामेव कैकेयी मिदं वचन मब्रवीत् ॥२४॥
"उत्तिष्ठ मूढे किं शेषे भयं त्वा माभि वर्तते ।
उपप्लुत मघौघेन नात्मान मवबुध्यसे ।
चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥२५॥
अक्षयं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति" ॥२६॥
मन्थराया वचः श्रुत्वा शयनात् सा शुभानना ।
उत्तस्थौ हर्ष-संपूर्णा चन्द्रलेखेव शारदी ।
"रामे वा भरते वाहं विशेषं नोपलक्षये" ॥२७॥
कैकेय्या वचनं श्रुत्वा मन्थरा भृश-दुःखिता ।
दीर्घमुष्णं च निश्वस्य कैकेयीं पुनरब्रवीत् ॥२८॥
"भविता राघवो राजा राघवस्यानु यः सुतः ।
राजवंशात्तु भरतः कैकेयि परिहास्यते ॥२९॥

---

(पापदर्शिनी) पाप-कर्मण उपदेष्ट्री। तस्या उत्थाने काल-क्षेपो भविष्यतीति शयानामेव । (अभिवर्तते) अभितः परितः वर्तते वेष्टयतीत्यर्थः। (उपप्लुतमघौघेन) दुःखसमूहेन व्याप्तम्। (अक्षयम्) अशक्यप्रतीकारम्। (परिहास्यते) हीनो भविष्यति।

दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राम-माता सपत्नी ते कथं वैरं न यातयेत्" ॥२०॥
एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।
दीर्घमुष्णं च निश्वस्य मन्थरामिद मब्रवीत् ॥२१॥
'अद्य राम मितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।
यौवराज्ये च भरतं क्षिप्रमेवाभिषेचये" ॥२२॥
अथ सा रुपिता देवी सम्यक् कृत्वा विनिश्चयम् ।
क्रोधागारे निपपिता सा बभौ मलिनाम्बरा ॥२३॥
आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ।
कैकेय्या दश- उपस्थान मनुज्ञाप्य प्रविवेश निकेतनम् ॥२४॥
रथादरप्राप्तिः स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ।
पाण्डुराभ्रमिवाकाशं राहु-युक्तं निशाकरः ॥२५॥
तत्र तां पतितां भूमौ शयाना मतथोचिताम् ।
प्रपन्न इव दुःखेन सोऽपश्यज्जगती-पतिः ।

---

( सौभाग्यवत्तया ) पति-वात्सल्यतया । ( वैरं न यातयेत् ) वैरनिर्यातनं न कुर्य्यात् । (रुषितः) क्रुद्धः । ( मलिनाम्बरा ) मलिनवस्त्रधरा । ( उपास्थान मनुज्ञाप्य ) उपस्थितानां मन्त्रि-पुरोहितादीनां स्व-स्व-गृह-गमन मनुज्ञाप्य । ( पाण्डुराभ्रेत्यादि ) रुष्ट कैकेयीयुक्ततया, सुधा-धवलतया च पाण्डुराभ्रयुक्तत्व माकाशस्य । ( अतथोचिताम् ) तथा शयनानुचिताम् ।

कामी कमलपत्राक्षी मुवाच वनितामिदम् ॥३६॥
"भूमौ शेषे किमर्थं त्वं मयि कल्याण-चेतसि ।
आत्मनो जीवितेनापि ब्रूहि यन्मनसि स्थितम् ।
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे" ॥३७॥
उवाच पृथिवी-पालं कैकेयी दारुणं वचः ।
"स्मर राजन् पुरा वृत्तं तस्मिन् देवासुरे रणे ।
तत्र त्वां च्यावयच्छत्रुः तव जीवितमन्तरा ॥३८॥
तत्र चापि मया देव यत्त्वं समभिरक्षितः ।
जाग्रत्या यतमानाया स्ततो मे प्रददे वरौ ॥३९॥
तौ तु दत्तौ वरौ देव निक्षेपौ मृगयाम्यहम् ।
तवैव पृथिवीपाल सकाशे रघुनन्दन ॥ ४० ॥
तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ।
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ॥४१॥
अभिषेक समारम्भो राघवस्योप कल्पितः ।
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ॥ ४२ ॥

---

(सुकृतेन) स्वपुण्येन । (च्यावयादिति) अडभाव आर्षः । (शत्रुः) शम्बरः । (जीवितमन्तरा) प्राणहरणं विना । (निक्षेपौ) न्यासरूपेण स्थापितौ । मृगयामि वाञ्छामीत्यर्थः । (प्रति श्रुत्य) शपथ-पूर्वकं प्रतिज्ञाय । (समारम्भः) सामग्री ।

नव पञ्च च वर्षाणि दण्डकारण्य माश्रितः ।
चीराजिन-धरो धीरो रामो भवतु तापसः" ॥४३॥

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
चिन्तामभिसमापेदे मुहूर्त्तं प्रततापच च ॥४४॥

दशरथ-विलापः

"सदा ते जननी-तुल्यां वृत्तिं वहति राघवः ।
तस्यैव त्व मनर्थाय किं निमित्त मिहोद्यता ॥४५॥
अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य मा धर्मो मामिह स्पृशेत्" ॥४६॥
पुत्र-शोकार्दितं पापा विसंज्ञं पतितं भुवि ।
विचेष्टमान मुत्प्रेक्ष्य ऐक्ष्वाकुमिदमब्रवीत् ॥४७॥
"आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्यमाश्रित्य हि मया त्वं च धर्मं प्रचोदितः ।
प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥४८॥
समयं च ममार्येमं यदि त्वं न करिष्यसि ।
अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥४९॥

---

(अभिसमापेदे) प्राप। (प्रतताप) मूर्छां प्राप्तः। (कुर्मि) इत्यार्षम्। (विचेष्टमानम्) विविधचेष्टाः कुर्वन्तम्। (परित्यक्ता) उपेक्षिता।

एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ।
नाशकत् पाशमुन्मोक्तुं बलिरिन्द्र-कृतं यथा ।५०॥
तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः ।
प्रभाता शर्वरी पुण्या चन्द्र-नक्षत्र-मालिनी ॥५१॥
वसिष्ठो गुण-सम्पन्नः शिष्यैः परिवृत स्तदा ।
उपगृह्याशु संभारान् प्रविवेश पुरोत्तमम् ॥५२॥
सुमन्त्र-प्रवेशः सत्त्वपश्य द्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
द्वारे मनुज-सिंहस्य सचिवं प्रियदर्शनम् ॥५३॥
तमुवाच महातेजाः सूत-पुत्रं विशारदम् ।
वसिष्ठः "क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम्" ॥५४॥
इति तस्य वचः श्रुत्वा सूत-पुत्रो महाबलः ।
स्तुवन्नृपति-शार्दूलं प्रविवेश निवेशनम् ॥५५॥
यदा वक्तुं स्वयं दैन्यान्न शशाक मही-पतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥५६॥

---

इन्द्रकृतम् ) इन्द्र-प्रेरित-वामनकृतम् । (पाशम्) पद-त्रयमित-प्रतिज्ञात-भूमि-दान-रूपम् । ( प्रभाता जाता ) रात्रिः इत्यर्थः । ( संभारान् ) कुशादीन् । (दैन्यं) सत्य-पाश-बन्धजम् । स्वकार्ये वक्तव्यज्ञा ।

"सुमन्त्र राजा रजनीं राम-हर्ष-समुत्सुकः ।
प्रजागर-परिश्रान्तः निद्रा-वशमुपागतः ॥५७॥
तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्या विचारणा" ॥५८॥
प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ।
"राममानय सूतेति यदस्याभिहितोऽनया" ॥५९॥
स राज वचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ।
कैकेय्याः निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ॥६०॥
सुमन्त्राय प्राञ्जलिं सुमुखं दृष्ट्वा विहार-शयनासने ।
रामानयनादेशः राज-पुत्रमुवाचेदं सुमन्त्रो राज-सत्कृतः ॥६१॥
"कौसल्या सुप्रजा राम पिता त्वां द्रष्टुमिच्छति ।
महिष्या सह कैकेय्या गम्यतां तत्र मा चिरम्" ॥६२
अथ सीता मनुज्ञाप्य कृत-कौतुक-मङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥६३॥
रामागमनम् स ददर्शासने रामो निषण्णं पितरं शुभे ।

---

(सुमुखं) प्रसन्न-वदनम् । (कौशल्या सुप्रजा) येन सुपुत्रेण त्वया कौसल्या सुप्रजावती तं त्वाम् । (कृतः) अनुष्ठितः (कौतुकार्थम्) अभिषेकोत्सवार्थं । (मङ्गले) येन सः ।

कैकेयी-सहितं दीनं मुखेन परिशुष्यता ॥६४॥

सपितुश्चरणौ पूर्व मभिवाद्य विनीतवत् ।

ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥६५॥

रामेत्युक्त्वा च वचनं वाष्प-पर्य्याकुलेक्षणः ।

शशाक नृपति दीनो नेक्षितुं नाभिभाषितुम् ॥६६॥

तदपूर्वं नरपते दृष्ट्वा रूपं भयावहम् ।

चिन्तयामास चतुरो रामः पितृ-हिते रतः ॥६७॥

दशरथं दृष्ट्वा "अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति ।

रामस्य खेदः तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्तते ॥६८॥

कैकय्याःतत्का- सदीन इव शोकेन विषण्ण-वदन-द्युतिः ।

रण-प्रच्छनम् कैकेयी मभिवाद्यैवं रामो वचनमब्रवीत् ॥६९॥

"कच्चिन्मया नापराद्ध मज्ञानाद्येन मे पिता ।

कुपितस्तन्ममाचक्ष्व त्वं चैवनं प्रसादय ॥७०॥

अतोषयन् महाराज मकुर्वन् वा पितुर्वचः ।

मुहूर्त मपि नेच्छेयं जीवितुं कुपिते नृपे" ॥७१॥

---

मुखेन उपलक्षितम् । ( सुसमाहितः ) नित्यमेकाग्रचित्तः ( वाष्प-पर्य्याकुलेक्षणः ) अश्रु-व्याप्त-नेत्रः । ( अन्यदा ) अन्यका ( आयासः ) खेदः ।

कैकय्या- एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उत्तरम् उवाचेदं सुनिर्लज्जा धृष्ट मात्महितं वचः ॥७२॥
"यदि तद्वक्ष्यते राजा शुभं वा यदि वाऽशुभम् ।
करिष्यसि ततः सर्व माख्यास्यामि पुनस्त्वहम्" ७
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच वचनं रामस्तां देवीं नृप-सन्निधौ ॥७४॥
रामस्य पित्रा- "अहो धिङ् नार्हसे देवि वक्तुं मामीदृशं वचः ।
देश-पालन अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥७५॥
संदेह शोक- भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे ।
प्रकाशः नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥७६॥
तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् ।
कैकेय्या रामाय करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥७७॥
स्ववर- तमार्जव समायुक्त मनार्य्या सत्यवादिनम् ।
श्रावणम् उवाच रामं कैकेयी वचनं भृशदारुणम् ।
"सन्निदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ॥७८॥

---

( राजा यद् वक्ष्यते तत् करिष्यसीत्यर्थः ) ( धिक् ) मामि तिशेषः । ( हितेन ) हितकर्त्रा । ( द्विर्नाभिभाषते ) यदुक्तं तदुक्तमेव, तद्विरुद्धं पुनर्न वदति । ( आर्जव-समायुक्तम् ) विनय सम्पन्नम । ( सन्निदेशे ) पितृ-प्रतिज्ञा-सम्पादने ।

त्वया रण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ।
भरतस्त्वभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥७९॥
एतत् कुरु नरेन्द्रस्य वचनं रघुनन्दन ।
सत्येन महता राम तारयस्व नरेश्वरम्" ॥८०॥
तदप्रिय ममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥८१॥
रामस्यकैकेय्याः नाहमर्थ-परो देवि लोक मावस्तु मुत्सहे ।
संदेह-निरा- विद्धि मा मृषिभिस्तुल्यं केवलं धर्म मास्थितम् ८२
करणम् नह्यतो धर्म-चरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचन-क्रिया ॥८३॥
यावन्मातर मापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥८४॥
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तथा ।
कैकेय्या श्चाप्यनार्याया: निष्पपात महाद्युतिः ॥८५॥

---

(सत्येन) सत्य-परिपालनेन । (अर्थ-परः) धनलुब्धः स्वार्थसाधन-परो वा (वचन-क्रिया) आज्ञप्ति-करणम् । (निष्पपात) निश्चक्राम।

रामस्य मातृ- जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ।
गृह-गमनम् ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥८६॥
सा चिरस्यात्मजं दृष्ट्वा मातृ-नन्दन मागतम् ।
अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥८७॥
परिष्वक्तश्च बाहुभ्यां भोजनेन निमन्त्रितः ।
दत्तमासन मालम्ब्य विशाल वदनद्युतिः ।
मातरं राघवः किञ्चिद् व्रीडात् प्राञ्जलिरब्रवीत् ॥
रामस्य मात्रे भरताय महाराजो यौवराज्यं प्रयच्छति ।
स्व-निर्वास मां पुनर्दण्डकारण्ये प्रव्राजयति तापसम् ।
वृत्त श्रावणम् चतुर्दश हि वर्षाणि वस्तव्यं विजने वने" ॥८९॥
तद्वृत्तं श्रुत्वा सा निकृत्तेव सालस्य यष्टिः परशुना वने ॥९०॥
कौशल्या-मूर्छा पपात सहसा देवी देवतेव दिवश्च्युता ॥९०॥
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गत-चेतसम् ॥९१॥
सा राघव मुपासीन मसुखार्त्ता सुखोचिता ।
उवाच पुरुष-व्याघ्र मुपशृण्वति लक्ष्मणे ॥९२॥

---

( वशी ) जितेन्द्रियः । ( अभिचक्राम ) अभिमुखं जगाम । ( प्रव्राजयति ) प्रेषयति । ( निकृत्ता ) छिन्ना । ( यष्टिः ) शाखा । ( दिवश्च्युता ) आकाशात् पतिता । ( असुखार्ता ) सुखनाशेनार्ता ।

कौशल्यायाः "न चाधर्म्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
वनगमना- विहाय शोक-सन्तप्तां गन्तुमर्हसि मामितः ॥९३॥
निषेधः यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् ।
त्वां साहं नानुजानामि न गन्तव्य मितोवनम्" ॥
रामस्यकौशल्या-उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ।
सम्बोधनम् "नास्ति शक्तिः पितुर्वाक्यम् समतिक्रमितुं मम ।
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ॥९५॥
यावज्जीवति काकुत्स्थः पिता मे जगती-पतिः ।
शुश्रूषा क्रियतां तावदेष धर्मः सनातनः" ॥९६॥

एवमुक्ता तु रामेण वाष्प-पर्य्याकुलेक्षणा ।
सापनीय तमायास मुपस्पृश्य जलं शुचि ।
चकार माता रामस्य मङ्गलानि मनस्विनी ॥९७॥
रामस्यसीता- प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् ।
समीपे गमनम् प्रहृष्ट-जन-सम्पूर्णं ह्रिया किञ्चिदवाङ् मुखः ॥९८॥
अथ सीता समुत्पत्य वेपमाना च तं पतिम् ।

---

(अधर्म्यम्) धर्म-विरुद्धं, कनिष्ठस्य राज्य-प्राप्ति-रूपम् । ( अनुमन्यस्व ) आज्ञापय । ( उपस्पृश्य ) आचम्य । (आयासम्) राम-वियोगजं दुःखम् । (सीता कथं मया बिना स्थास्यति) इति चिन्ता ।

अपश्यच्छोक-सन्तप्तं चिन्ता-व्याकुलितेन्द्रियम् ॥९९॥

तां दृष्ट्वा सहि धर्मात्मा न शशाक मनोगतम् ।

तं शोकं राघवः सोढुं ततो विवृततां गतः ॥१००॥

"सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ।

सोऽहं त्वा मागतो द्रष्टुं प्रस्थितो विजनं वनम् ॥

सा त्वं वसेह कल्याणि राज्ञः समनुवर्त्तिनी ।

भरतस्य रता धर्मे सत्य-व्रत-परायणा ॥१०२॥

सीतायाःसह-एवमुक्ता तु वैदेही प्रियार्हा प्रिय-वादिनी ।

गमनाय प्रणयादेव संक्रुद्धा भर्त्तार मिद मब्रवीत् ।

प्रार्थनम् "नय मां वीर विस्रब्धं पापं मयि न विद्यते ॥१०३

किं त्वां मन्यत वैदेहः पिता मे जगतीपतिः ।

राम जामातरं प्राप्य स्त्रियं पुरुष-विग्रहम् ॥१०४॥

किं हि कृत्वा विषण्णस्त्वं कुतो वा भय मस्ति ते ।

---

(विवृततां गतः) विवृताभिप्रायं गतः,स्वाभिप्रायं प्रकाशितवानित्यर्थः । ( तत्र-भवान् ) पूज्यः । (समनुवर्तिनी) अनुकूला । (प्रियार्हा) प्रिय-भाषण-योग्या । ( प्रणयात् ) स्नेहात् । ( पापम् ) अपराधः । (स्त्रियं पुरुषविग्रहम्) आकारेण पुरुषं क्रियया तु स्त्रीरूपम् । (किं हि कृत्वा) किं मनसि विचार्य ।

यत्परित्यक्तु-कामस्त्वं मामनन्य-परायणाम् ॥१०५॥
स्वयं तु भार्य्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम, परेभ्यो दातु मिच्छसि ॥१०६॥
न पिता नात्मजो-चात्मा न माता न सखी-जनः ।
इह प्रेत्य च नारीणां पतिरेको गतिस्सदा ॥१०७॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघवः ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुश-कण्टकान् ॥१०८॥
अहं गमिष्यामि वनं सुदुर्गमम्,
मृगायुतं वानर-वारणैश्च ।
वने निवत्स्यामि यथा पितुर्गृहे,
तवैव पादा वुपगृह्य संमता ॥१०९॥
पत्रं मूलं फलं यत्तु अल्पं वा यदि वा बहु ।
दास्यसे स्वयमाहृत्य तन्मेऽमृत-रसोपमम् ॥११०॥
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन् परां कीर्तिं गच्छ राम मया सह" ॥

---

(अनन्य-परायणाम्) केवलं त्वयि निविष्ट-चित्ताम् । (शैलूषः) जाया-जीवः । (प्रेत्य) मरणानन्तरम् । (गतिः) आश्रयः । (मृगायुतम्) मृगै रासमन्तात् युतम् । समता तवेति शेषः । (सः) देशः । (निरयः) नरकः ।

इति सा शोक-सन्तप्ता विलप्य करुणं बहु ।
चुक्रोश पति मायस्ता भृशमालिङ्ग्य सुस्वरम् ॥
तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयं स्तदा ॥११३॥

रामस्य सीता-नयन-स्वीकरणम्

आरभस्व शुभ-श्रोणि, वन-वास-क्षमाः क्रियाः ।
नेदानीं त्वदृते सीते, स्वर्गोऽपि मम रोचते ॥११४
एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्व मागतः ।
सीता मुवाचातियशा राघवञ्च महाव्रतम् ।

लक्ष्मणस्य प्रार्थनम्

"अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः" ॥११५॥
दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥११६॥
स राजा पुत्रमायान्तं दृष्ट्वा दूरात्कृताञ्जलिम् ।
उत्पपाता सनात्तूर्णमार्तः स्त्री-जन संवृतः ।
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥११७॥
अथ रामो मुहूर्त्तेन लब्ध-संज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णव-परिप्लुतम् ॥११८॥

---

(परिविश्वासयन्) उज्जीवयन् । (वन-वास-क्षमाः) वनवासोचिताः ।

आपृच्छे त्वां महाराज सर्वेषा मीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ।
लक्ष्मणं चानुजानाहि सीता चान्वेति मां वनम् ।
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ।
पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥१२०॥
नैवाहं राज्य मिच्छामि न सुखं न च मेदिनीम् ।
त्वा महं सत्य मिच्छामि नानृतं पुरुषर्षभ " ॥१२१
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्य मब्रवीत् ।
"रथमारोह भद्रं ते राज-पुत्र महा-यशः ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसे" ॥

रामस्य वन-प्रस्थानम्

अथो ज्वलन-संकाशं चामीकर-विभूषितम् ।
तमारुरुहतु स्तूर्णं भ्रातरौ राम-लक्ष्मणौ ॥१२३॥
रामोऽपि रात्रि-शेषेण तेनैव महदन्तरम् ।
जगाम पुरुष-व्याघ्रः पितु राज्ञा मनुस्मरन् ॥१२४॥

---

( आपृच्छे ) विज्ञापयामि । ( कुशलेन ) चक्षुषेतिशेषः ; ( अनृतम् ) असत्ययुक्तम् । ( ज्वलन-सङ्काशम् ) अग्निवद्दीप्तप्रभम् । ( चामीकर-विभूषितम् ) चामरालंकृतम् । (रात्रि-शेषेण) शेष-रात्रौ ।

( युग्मकम् )

तत्र त्रिपथगां दिव्यां शिवतोया मशैवलाम् ।
ददर्श राघवो गङ्गां पुण्या मृषि-निषेविताम् ॥ १२५
जलाघाताट्ट हासोग्रां फेन-निर्मल-हासिनीम् ।
क्वचित् वेणी-कृत-जलां क्वचिदावर्त-शोभिताम् ॥ ४

गुह-देश प्रापणम्

तत्र राजा गुहो नाम रामस्यात्म-समः सखा ।
निषाद-जात्यो बलवान्स्थपति श्चेति विश्रुतः ॥१२७

स श्रुत्वा पुरुष-व्याघ्रं रामं विषय मागतम् ।
वृद्धैः परिवृतोऽमात्यै र्ज्ञातिभि श्चाप्युपागतः ॥१२८
तत श्चीरोत्तरासङ्गः सन्ध्या मन्वास्य पश्चिमाम् ।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥१२९॥
प्रभातायां तु शर्वर्यां पृथु-वक्षा महा यशाः ।
गुहं वचन मक्लीवं रामो हेतुमदब्रवीत् ।

---

( महदन्तरम् ) महाद्दूरम । ( त्रि-पथगाम् ) त्रिभिः पथिभिः गच्छति इति ताम् । (शिव-तोयाम् ) स्वच्छ-जलाम् । (शिला मध्य) स्थले ( यो जलाघात ) शब्दः तद्रूपेण ( अट्टहासेन ) उग्राम् । अनेक विध तिर्यगादि-गमनेन ( वेणी-कृतं जलं ) यया । (आवर्तैः) अनेक विध-भ्रमित-जलैः ( शोभावतीम् ) । ( विषयम् ) देशम् । (अवास्य) उपास्य । (पश्चिमाम् )। माध्यान्ह-कालिकीम् (हेतुमत्) युक्तियुक्तम् ।

"जटाः कृत्वा गमिष्यामि न्यग्रोध-क्षीरमानय" ॥

तत्क्षीरं राज-पुत्राय गुहः क्षिप्र मुपाहरत् ।
लक्ष्मणस्या त्मनश्चैव रामस्तेना करोज्जटाः ॥१३१॥

सुमन्त्र निव- अनुज्ञाप्य सुमन्त्रञ्च सबलं चैव तं गुहम् ।
र्तनम् आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परन्तपः ॥१३३॥

भरद्वाजाश्रम- सीता-तृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।
प्राप्तिः भरद्वाजाश्रमे रम्ये तां रात्रि मवसत्सुखम् ॥१३४॥
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
"मधु-मूल-फलोपेतं चित्रकूटं व्रजेतिह" ॥१३५॥

चित्रकूट- ततस्तौ पाद-चारेण गच्छन्तौ सह सीतया ।
प्रापणम् रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥१३६॥

सुमन्त्रस्या- अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
योध्या-प्राप्तिः अयोध्या मेव नगरीं प्रययौ गाढ-दुर्मनाः ।
अथ सूतो महाराजं कृताञ्जलि रुपास्थितः ॥१३७॥

---

( उपाहरत् ) आनीतवान् । ( सीता तृतीया ) यस्य सः । ( व्युष्टायाम् ) व्यतीतायाम् । ( आसेदतुः ) प्रापतुः । (गाढदुर्मना) अति खिन्नः ।

राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रु-पूर्ण-मुखं दीन मुवाच परमार्त्तवत् ॥१३८॥
सुकुमार्य्या तपस्विन्या सुमन्त्र सह सीतया ।
राजपुत्रौ कथं पादै रवरुह्य रथाद्गतौ ॥१३९॥
अतोऽनु किं दुःखतरं योऽह मिक्ष्वाकु-नन्दनम् ।
इमामवस्था मापन्नो नेह पश्यामि राघवम् "॥१४०॥
दशरथस्य- इति रामस्य मातु श्च सुमित्राया श्च सन्निधौ ।
मरणम् राजा दशरथः शोचञ्जीवितान्त मुपागमत् ॥१४१॥
तमग्नि मिव संशान्त मम्बु-हीन मिवार्णवम् ।
हत-प्राय मिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ।
सर्वे द्विजाः सहा मात्यैः पृथग्वाच मुदीरयन्॥१४२
"इक्ष्वाकूणा मिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नो राष्ट्रं न विनाश मवाप्नुयात् ॥१४३
ना राजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् "॥१४४

---

(ध्वस्तांगम् ) धूसरिताङ्गम् । ( अराजकम् ) नियन्तृरहितम् । ( स्वकम् ) स्वकीयम् ।

वासिष्टस्य भरता नयनाय दूतसम्प्रेषणम्

वसिष्ठे नाभ्यनुज्ञाता दूताः सन्त्वरिता तदा ।
ययुश्चा सह्य-परिखं रम्यं राज-गृहं पुरम् ॥१४५॥
राज्ञः पादौ गृहीत्वा तु त ऊचुर्भरतं वचः ।
"पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्य मात्ययिकं त्वया" ॥१४६॥
स मातामह मामन्त्र्य मातुलं च युधाजितम् ।
रथमारुह्य भरतः शत्रुघ्न-सहितो ययौ ॥१४७॥

भरतस्यायोध्या प्राप्तिः

तां पुरीं पुरुष-व्याघ्रः सप्त-रात्रोषितः पथि ।
अयोध्या मग्रतोदृष्ट्वा सारथिं वाक्यमब्रवीत् ॥१४८॥
"एषा नाति प्रतीता मे पुण्योद्याना यशस्विनी ।
अयोध्या दृश्यते दूरात् सारथे पाण्डु-मृत्तिका" ॥

भरत-विलापः

श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःख-सन्तप्त इदं वचन मब्रवीत ॥१५०॥
"किं नु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृ-समेन च" ॥१५१॥

---

(असह्या) दुस्सहा (परिखा) यस्य तत् । (आत्ययिकम्) कालातिक्रमासहम् । (नातिप्रतीता) नाति हृष्टा, निरानन्दत्वात् । (पाण्डु-मृत्तिका-समा) । (हतस्य) भाग्यहीनस्य ।

कौशल्या-भर स तु राजात्मजश्चापि शत्रुघ्न-सहितस्तदा ।
तयोः राम- प्रतस्थे भरतो येन कौसल्याया निवेशनम् ॥१५२॥
विवासन-विषये भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ।
सम्वादः । "इदं ते राज्य-कामस्य राज्यं प्राप्तमकण्टकम्" ॥१५३

एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा ।
कौसल्यां प्रत्युवाचेदं लोकैर्बहुभिरावृताम् ॥१५४॥
"कृत-शास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन ।
सत्य-संधः सतां श्रेष्ठो यस्यार्य्योऽनुमते गतः ॥
परिपाल्यमानस्य राज्ञो भूतानि पुत्रवत् ।
ततस्तु द्रुह्यतां पापं यस्यार्य्योऽनुमते गतः ॥१५६॥
पुत्रैर्दासैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मिष्टमश्नातु यस्यार्य्योऽनुमते गतः ॥१५७॥
संग्रामे समुपोढे च शत्रु-पक्ष-भयङ्करे ।
पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥१५८॥

---

येन कौसल्याया निवेशनं प्राप्यते इत्यर्थः । ( अकण्टकम् ) रिपु-रहितम् । ( कृत-शास्त्रानुगा ) गुरु-शिक्षित-श्रुति-स्मृति-मार्गगा । ( अनुमते ) सम्मतौ । ( द्रुह्यतां ) तस्मै इति शेषः । ( समुपोढे ) प्राप्ते । ( शत्रुपक्षाणां भयङ्करोतीति ) तादृशे ।

मास्य धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥१५९॥
उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥१५९॥
देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मास्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः" ॥

तमेवं शोक-संतप्तं भरतं कैकेयी-सुतम् ।
उवाच वदतां श्रेष्ठो वसिष्ठो भगवानृषिः ॥१६२॥
"अलं शोकेन भद्रन्ते राज-पुत्र महा-यशः ।
प्राप्त-कालं नरपतेः कुरु संयानमुत्तमम् " ॥१६३॥
वसिष्ठस्य वचः श्रुत्वा भरतो धारणां गतः ।
प्रेत-कार्य्याणि सर्वाणि कारयामास धर्मवित् ॥१६४
अज्ञानां भरताय ततः प्रभात-समये दिवसेऽथ चतुर्दशे ।
राज्य-समर्पणम् समेत्य राज्यकर्तारो भरतं वाक्य मब्रुवन् ॥१६५॥
"त्वमद्य भव नो राजा राजपुत्र, महायशः ।

---

( अपात्र वर्षी ) कुपात्रे दाता । ( परिकल्प्यते ) प्राप्नोति । ( संयानं ) प्रेत-निर्वाहम् । ( धारणां ) धैर्य्यम् ।

अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ" ॥१६६॥

भरतस्य राज्या- भरतस्तं जनं सर्वं प्रत्युवाच धृत-व्रतः ।

स्वीकरणम् "ज्येष्ठस्य राजता नित्य मुचिता हि कुलस्य नः" ॥१

भरतस्य वनं ततः समुत्थितः कल्य मास्थाय स्यन्दनोत्तमम् ।

प्रति गमनम् प्रययौ भरतः शीघ्रं राम-दर्शन-कांक्षया ॥१६८॥

अग्रतः प्रययुस्तस्य सर्वे मन्त्रि पुरोधसः ।

अधिरुह्य हययुक्तान् रथान् सूर्य-रथोपमान् । १६९॥

अथ गत्वा मुहूर्त्तं तु चित्रकूटं स राघवः ।

मन्दाकिनी मनुप्राप्तस्तं जनं चेद मब्रवीत् ॥१७०॥

"जगत्यां पुरुष-व्याघ्र आस्ते वीरासने रतः ।

जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम्" ॥

एवं स विलपं स्तस्मिन् वने दशरथात्मजः ।

ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥१७२॥

"मन्निमित्त मिदं दुःखं प्राप्तो रामः सुखोचितः ।

धिग्जीवितं नृशंसस्य मम लोक-विगर्हितम्" ॥१७३

इत्येवं विलपन्दीनः प्रस्विन्न-मुख-पङ्कजः ।

---

( कल्यम् ) प्रातः काले । (जगत्यां) भूमौ । (वीरासने) योगिनां दक्षिण-जानूपरि न्यस्त-वाम-पादतया ऽवस्थानरूपे आसने । ( प्रस्विन्नं ) स्वेद-क्लिन्न (मुख-पङ्कजं) मुख कमलं यस्य सः ।

पादा ववाप्य रामस्य पपात भरतो रुदन् ॥१७४॥

राम भरत-संगमः दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्य्येति सकृद्दीनं पुनर्नोवाच किञ्चन ।
शत्रुघ्नश्चापि रामस्य ववन्द चरणौ रुदन् ॥१७५॥
ता वुभौ स समालिङ्ग्य रामश्चा श्रूण्यवर्तयत् ।
जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ।
ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ॥१७६॥
कथञ्चिद भिविज्ञाय विवर्ण-वदनं कृशम् ।
भ्रातरं भरतं रामः परिजग्राह बाहुना ॥१७७॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः ।
अङ्के भरत मारोप्य पर्य्यपृच्छत्स सादरम् ॥१७८॥
"क्वनु तेऽभूत् पिता तात, राजा यत्त्वमिहागतः ।
नहि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ।"
रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ॥१७८॥

रामाय पितृ-मृत्यु-श्रावणम् "निष्क्रान्त-मात्रे भवति सह-सीते स-लक्ष्मणे ।
दुःख-शोकाभि भूतस्तु राजा त्रिदिवमभ्यगात्" १८०

---

( अवर्तयत् ) अत्यजत् । ( जटिलं ) जटाधर । ( दुर्दर्शं ) दु खेन द्रष्टुं योग्यम् । नहि त्वं जीवितस्तस्य सेवां हित्वेत्यर्थः । ( त्रिदिवम् ) स्वर्गम् ।

तां श्रुत्वा करुणां वाचं पितुर्मरण-संहिताम् ।
राघवो भरतेनोक्तां बभूव गत-चेतनः ॥१८१॥
ततः पर्ण-कुटी-द्वार मासाद्य जगती-पतिः ।
परि जग्राह बाहुभ्या मुभौ भरत-लक्ष्मणौ ॥१८२॥
ततः पुरुष सिंहानां वृतानां तैः सुहृद्गणैः ।
शोचता मिव रजनी दुःखेन व्यत्यवर्तत ॥ ८३॥
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
भरतस्य राज्य-मन्दाकिन्यां हुतं जप्यं कृत्वा राम मुपागमन् ।
समपर्णम् भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥१८४॥
"सान्त्विता मामिका माता दत्तं राज्य मिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्य मकण्टकम् ।
शिरसा त्वा भियाचेऽहं कुरुष्व करुणां मयि" १८५
रामस्यास्वी- पुनरेवं ब्रुवाणं तं भरतं लक्ष्मणाग्रजः ।
करणम् प्रत्युवाच ततः श्रीमान् ज्ञाति-मध्ये सुसत्कृतः १८६
"दैवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ श्रीमान् वरमाराधितस्तदा ।
तव राज्यं नर-व्याघ्र, मम प्रव्राजनं तथा ॥१८७॥

---

( आसाद्य ) प्राप्य । ( सान्त्विता ) कृताश्वासा ।

सोऽहं वनमिदं प्राप्तः निर्जनं लक्ष्मणान्वितः ।
सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः १८९
न त्वया शासनन्तस्य त्यक्तुं न्याय्य मरिन्दम ।
स त्वयापि सदा मान्यः स नो बन्धुः स नः पिता"॥
एव ब्रुवाणं भरतः कौशल्या-सुत मब्रवीत् ।
"कथं दशरथाज्जातः शुभाभिजन-कर्मणः ।
जानन्धर्म मधर्मञ्च कुर्य्यां कर्म जुगुप्सितम् ॥१९०॥
यदि त्व वश्यं वस्तव्यं कर्तव्यं वा पितुर्वचः ।
अह मेव निवत्स्यामि चतुर्दश वने समाः" ॥१९१॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥१९२॥
राम-पादुके "अधिरोहार्य, पादाभ्यां पादुके हेमभूषिते ।
आदाय भरत- एते हि सर्व-लोकस्य योग-क्षेमं विधास्यतः" १९३
स्य निवर्तनम् सोऽधि रुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत् सुमहातेजा राघवाय महात्मने ॥१९४॥

---

(अप्रतिद्वन्द्वः) शीतोष्णादि बाधा-रहितः । (शुभेऽभिजन कर्मणी) यस्य स तस्मात् । (जुगुप्सितम्) निन्दितम् । (समाः) वर्षाणि । (सज्जमानया) स्खलन्त्या । (योग-क्षेमं) (योगः) लोकोपकारकाणां कूपादीनां निर्माणम् (क्षेमः) तेषां रक्षणम् ।

ततश्शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्न-सहितस्तदा ।
नन्दि-ग्रामं ययौ तूर्णं शिरस्यादाय पादुकाम् १९५
नन्दिग्रामेऽवसद्वीरः ससैन्यो भरतस्तदा ।
स वालव्यजनं छत्रं धारयामास च स्वयम् ॥१९६॥
ततस्तु भरतः श्रीमानाभिषिच्यार्य-पादुके ।
तदधीनस्तदा राज्यं कारयामास सर्वदा ॥१९७॥

रामस्य चित्र-कूट त्यागः
तस्मादन्यत्र गच्छामि इति सञ्चिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च सङ्गतः ॥१९८॥



---

( प्रातिष्ठत ) प्रस्थितः ।

# * आरण्य काण्डम् *

प्रविश्य तु महारण्यं दण्डकारण्य मात्मवान् ।
रामस्य दण्ड- ददर्श रामो दुर्धर्ष स्तापसा श्रम-मण्डलम् ॥१॥
कारण्य- अब्रवी द्वचनं वीरो लक्ष्मणं लक्ष्मि-वर्धनम् ।
प्रवेशः "वहि लक्ष्मण निष्क्रामत्य गस्त्यो भगवानृषिः"॥
एव मुक्त्वा महाबाहु रगस्त्यं सूर्य-वर्चसम् ।
जग्राहा पतत स्तस्य पादौ च रघु-नन्दनः ॥३॥
प्रतिगृह्य च काकुत्स्थ मर्चयित्वासनोदकैः ।
पूजयित्वा यथा-कामं ततोऽगस्त्य स्त मब्रवीत् ॥४॥
रामस्यागस्त्या- "इदं दिव्यं महच्चापं हेम-वज्र-विभूषितम् ।
दस्त्र-प्राप्तिः जयाय प्रतिगृह्णीष्व वज्रं वज्र-धरो यथा" ॥५॥
एव मुक्त्वा महातेजाः समस्तं तद्वरायुधम् ।
दत्त्वा रामाय भगवा नगस्त्यः पुनरब्रवीत् ॥६॥

---

( आत्मवान् ) धैर्यवान् । ( तापसानां ) तपस्विना माश्रम समूहम् । ( आपततः ) आश्रमादा गच्छतः । (प्रतिगृह्य)उत्थापन पूर्वक मालिङ्ग्य । ( वज्रधरः ) इन्द्रः ।

"इतो द्वि-योजने तात, वहु मूल-फलोदकः ।
देशो वहुमृगः श्रीमान् पञ्चवट्य भिविश्रुतः ॥७॥
तत्र गत्वा श्रमपदं सीता-लक्ष्मण-सङ्गतः ।
रमस्व त्वं पितुर्वाक्यं यथोक्त मनुपालयन्" ॥८॥

रामस्य पञ्च-वटी गमनम् ततः पञ्चवटीं गत्वा नाना-व्याल-मृगायुताम् ।
राघवः पर्ण-शालायां हर्ष माहारयत्परम् ॥९॥
वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
तं देशं राक्षसी काचिदा जगाम यदृच्छया ॥१०॥

( युग्मकम् )

सा तु शूर्पणखा नाम दश ग्रीवस्य रक्षसः ।
भगिनी राम मासाद्य ददर्श त्रिदशोपमम् ॥११॥
वभूवेन्द्रोपमं दृष्ट्वा राक्षसी काम-मोहिता ।
निकृत्त-कर्ण-नासा चा भवद्रामानुजेन सा ॥१२॥

---

(अभिविश्रुतः) प्रसिद्धः । (नाना-विधैः व्यालैः मृगैश्च) (आयुतां) व्याप्ताम् । (आहारयत) प्राप्तवान् । (सुखम्) सुखेन (त्रिदशोपमम्) देव-तुल्यम् । (रामस्य अनुजः) कनिष्ठभ्राता लक्ष्मण स्तेन ।

ततस्तु सा राक्षस-सङ्घ-संवृतं,

लक्ष्मणेन शूर्प- खरं जनस्थान-गतं विरूपिता ।

णखा-नासिका उपेत्य तं भ्रातर मुग्र-दर्शनं,

छेदः पपात भूमौ गगनाद्यथाशनिः ॥१३॥

स्वभ्रातृ-समीपे तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।

गत्वा तस्याः तत स्तद्राक्षसं सैन्यं घोर-वर्मायुध-ध्वजम् ।

विलापः निर्जगाम जनस्थाना न्महानादं महाजवम् ॥१४॥

रामोपिऽचारयं श्चक्षुः सर्वतो रण-पण्डितः ।

ददर्श खर-सैन्यं तद् युद्धायाभिमुखो गतः ॥१५॥

रामस्य खर- ततो रामस्तु संक्रुद्धो मण्डली कृत कार्मुकः ।

दूषणाभ्यां ससर्ज निशितान् वाणान् शतशोऽथ सहस्रशः ।१६

सह युद्धम् चतुर्दश सहस्राणि रक्षसां भीम-कर्मणाम् ।

हतान्ये केन रामेण मानुषेण महात्मना ॥१७॥

शूर्पणखाया-ततः शूर्पणखा दीप्ता रावणं लोक-रावणम् ।

रावण-समीपे अमात्य-मध्ये संक्रुद्धा परुषं वाक्य मब्रवीत् ॥१८॥

गत्वा स्वदशा- "चतुर्दश सहस्राणि रक्षसां क्रूर-कर्मणाम् ।

वर्णनम् हतान्येकेन रामेण खरश्च सह-दूषणः ।

---

विच्छिन्न-कर्ण नासिकात्वाद् विरूपत्वम् ।

( गगनात् ) आकाशात् । ( शोणितोक्षिताम ) रुधिरार्द्राम् । ( रण-पण्डितः ) रण-कर्मनिपुणः । धनुष आकर्णाकर्षणेन ( मण्डलाकारी-कृत-धनुः ) । ( लोक-रावणम् ) लोक भयप्रदम् ।

त्वं तु लुब्धः प्रमत्तश्च भयं यो नावबुध्यसे ॥१९॥

रामस्य तु विशालाक्षी पूर्णेन्दु-सदृशानना ।
सीता भार्य्या वरारोहा वैदेही तनु-मध्यमा ॥२०॥

तवानुरूपा भार्या सा त्वं च तस्याः पतिर्वरः ।
विरूपिताहं क्रूरेण लक्ष्मणेन महाभुज ॥२१॥"

ततः शूर्पणखा-वाक्यं तच्छ्रुत्वा रोम-हर्षणम् ।
रावणस्य मा- ददर्श नियताहारं मारीचं नाम रावणः ।
रीचाय सीता- ततः पश्चादिदं वाक्य मब्रवीद्वाक्य-कोविदः ॥२२॥
हरणाय कथ- "चतुर्दश सहस्राणि रक्षसा मुग्र-तेजसाम् ।
नम् निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना ॥२३॥

अस्य भार्यां जनस्थानात्सीतां सुर-सुतोपमाम् ।
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव"।
मारीचस्यराव- प्रत्युवाच महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥२४॥
ण-निवारणम् "सुलभाः पुरुषा राजन् सततं प्रिय-वादिनः ।

---

(पूर्णेन्दु-सदृशं) पूर्णचन्द्रतुल्यम् ( आननं ) मुखं यस्याः सा । (रोम-हर्षणम् )रोमाञ्चकरम् । ( पदातिना ) ऐकेन मानुषेण रथ-स्थानांसहस्रशो रक्षसां वधः इति विस्मयकरम् । (सुरसुतोपमाम्) देव-कन्या-तुल्याम् । ( आनयिष्यामि ) आर्षमिदम्, आनेष्यामि।

अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः २५

न नूनं बुध्यसे रामं महा-वीर्यं गुणोन्नतम् ।

रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्व मर्हसि ॥२६॥

न त्वं समर्थस्तां हर्तुं राम—चापाश्रयां वने ।

यदीच्छसि चिरं भोक्तुं मा कृथा राम-विप्रियम् २७

किन्तु शक्यं मया कर्तु मेवं त्वयि दुरात्मनि ।

एष गच्छाम्यहं तात स्वस्ति तेऽस्तु निशाचर" २८

मारीचस्य मनोहरं दर्शनीयं रूपं कृत्वा मृगस्य सः ।

मृगरूपेण प्रलोभनार्थं वैदेह्या नाना-धातु-विचित्रितम् ।

क्रीडनम् रामाश्रम-पदा भ्याशे विचचार यथासुखम् ॥२९॥

अदृष्ट-पूर्वं तं दृष्ट्वा नाना-रत्न-मयं मृगम् ।

विस्मयं परमं सीता जगाम जनकात्मजा ॥३०॥

---

( अप्रियस्येत्यादि ) तत्कालमप्रियतया प्रतीयमानस्यापि कालान्तरे हितकरस्य वचसो वक्ता तस्य च ग्रहीता दुष्प्राप्यः। ( अप्रमेयम् ) अपरिच्छेद्यम् । ( किन्तुशक्यमित्यादि ) त्वयि एवं दुरात्मनि सति मया किं कर्तुं शक्यते, न किमपीत्यर्थः । ( अभ्याशे ) समीपे ।

सीतायाः "आर्य पुत्राभिरामो ऽसौ मृगो हरति मे मनः।
मृगप्राप्तये आनयैनं महाबाहो क्रीड़ार्थं नो भविष्यति" ॥३१॥
इच्छा लोभितस्तेन रूपेण सीतया च प्रचोदितः।
मृग-ग्रहणाय उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः।३२॥
रामस्य "इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम्।
गमनम् अह मेनं वधिष्यामि ग्रहीष्या म्यथवा मृगम्" ३३

तथा तु तं समादिश्य भ्रातरं रघु-नन्दनः।
बद्धासि धनुरादाय प्रदुद्राव यतो मृगः ॥३४॥
दर्शना दर्शनादेव सोऽपाकर्षत राघवम्।
सुदूर माश्रमस्यास्य मारीचो मृगतां गतः ॥३५॥
दृष्ट्वा रामो महा-तेजा स्तं हन्तुं कृतनिश्चयः।
मुमोच ज्वलितं दीप्त मस्त्रं ब्रह्म-विनिर्मितम्।३६

शेमण मृग- सभृशं मृग-रूपस्य विनिर्भिद्य शरोत्तमः।
रूपस्य मारी मारीचस्यैव हृदयं बिभेदाशनि सन्निभः ॥३७॥
चस्य वधः संप्राप्त-काल माज्ञाय चकार च ततः स्वरम्।
सदृशं राघवस्यैव हा सीते, लक्ष्मणेति च ॥३८॥

---

(यन्त्रितः) नियोजितः। (ब्रह्म-विनिर्मितम्) ब्रह्म दत्तम्। (विनिर्भिद्य) छित्त्वा। (अशनि-सन्निभः) वज्र तुल्यः। (आज्ञाय) ज्ञात्वा।

